# रायपसेणी।

॥ ओंनमः ॥ श्रीवीतरागाय। नमो अरिहंताणं नमो सिद्धाणं नमो आयरियाणं नमो उवज्झायाणं नमो लोएसव्वसाहूणं।

---

ओं नमो वीतरागाय। प्रणमतवीरजिनेश्वर चरणयुगं परममाटलच्छायम्। अधरीकृतनतवासव मुकुटस्थितरत्नरुचिचक्रम्॥ राजप्रश्नीयमहं विवृणोमियथाक्रमं गुरुनियोगात्। तत्रच शक्ति मशक्तिं गुरवोजानन्ति काञ्चित्। अथकस्मादिदमुपांग राजप्रश्नीयाभिधानमिति। उच्यते। इहप्रदेशी नामराजाभगवत केशिकुमारश्रमणस्य समीपे यान् जीवविषयान् प्रश्नानकार्षीत्, यानिच तस्मैकेशिकुमारश्रमणोगणभृत् व्याकरणानिव्याकृतवान्, यच्च व्याकरणसम्यकपरिणतिभावतो बोधिमासाद्या मरणान्त शुभानुशययोगत। प्रथमेसौधर्म्मेनाम्नि नाकलोकविमानमाधिपत्येना ध्यतिष्ठत्। यथा च विमानाधिपत्यप्राप्त्यनन्तरं सम्यगवधिना ज्ञाभोगतः श्रीमद्वर्द्धमानस्वामिनं भगवन्तमालोक्य भक्त्यातिशयपरीतचेता सर्वस्वसामग्रीसमेतइहावतीर्य भगवत पुरतोद्वात्रिंशद्वि धमनुपीनत्या ... यथायुष्क दिविसुखमनुभूय ततश्च्युत्वायथसमागत्य यथामुक्तिपदमवा प्स्यति, तदेतत्सर्वमस्मिन्नुपांगमभिधेय ... व्यतामूलं। राजप्रश्नाभूति राजप्रश्नेषुभवंराज प्रश्नीयं अथकस्यांगस्येदमुपांगं उच्यतेसूत्रकृतांगस्य कथं तदुपांगगत्वमितिचेत। सूत्रकृतेहि अशी त्याधिकं शतत्रिक्रियावादिना सप्तषष्टिरज्ञानिकानां द्वात्रिंशत् वैनयिकानां ... यथावीणिविशत्यधि कानिपायपिडकशतानि प्रतिचिप्यचसमयस्याप्यते। उक्तं च। "नन्दाध्ययनी सूयगडे णं असी यसयंकिरियावाईणं। चउरासी अकिरियावाईणं सत्तट्ठीअन्नाणीयवाईणं बत्तीसावेणइयवाईणं। तिण्हन्तेवट्ठाणं पासण्डियसयाणं वूहंकिच्चा ससमयेठाविद्यपत्ति।" प्रदेशीचराजापूर्वीमक्रियावादि मतभावितमनाआसीत् अक्रियावादिमतमेवचाश्रित्यजीवविषयान् प्रश्नान् कारात्, केशिकुमारश्रम णश्चगणधारीसूत्रकृतांगसूचितअक्रियावादिमतप्रतिक्षेपमुपजीव्यव्याकरणानिव्याकार्षीत्। ततो या न्येवसूत्रकृतांगसूचितानिकेशिकुमारश्रमणेनव्याकरणानि व्याकृतानि तान्येवात्रसविस्तरमुक्तानीति सूत्रकृतांगगतविशेषप्रकटनादिदमुपांगं सूत्रकृतांगस्येति। एतच्चव्यक्ताचभगवतावर्द्धमानस्वामिना गौतमायसाक्षादभिहिता तत्र नयस्यां नगर्य्यां येनप्रक्रमेणाम्यधीयते तदेतत्सर्वमभिधित्सुरिदमाह।

---

देवदेवंजिनं नत्वा श्रुतदेवा विशेषत राजप्रश्नीय सूत्रस्य वार्त्तिकं विदधानच। राजप्रश्नी यामाटत कश्चित् प्रदेसीनामकराजाई केसीकुमारश्रमणापासिजीवनां अनेकप्रश्नकाध्या केसीगुरई ये प्रश्नानां उत्तरदीधा प्रदेसीराजाए सम्यग्प्रकारएतेतेप्रश्नसद्दह्या धर्मपाम्यु सौधर्मदेवलोक

भाव', विशिष्टानि सन्निविष्टान्निसर्गनिवेशपाटका इतिभाव', बहुलानिवहूनियस्यां सा तथा। "उक्कोडियगायगंठिभेदतक्करखंडरक्खरहिया।" उत्कोटाखंवा तया चरन्ति उत्कोटिकास्तैगात्रभेदे शरीरविनाशकारिभिर्ग्रन्थभेदैर्ग्रन्थिच्छेदैः तस्करैः खण्डरक्षैर्दण्डपाशिकैर्रहिता। अनेनतत्कोपद्रव कारिणामभावमाह। खेमा अशिवाभावात्। "निरुद्दवा" राजादिकृतोपद्रवाभावात्। सुभिक्षा भिक्ष काणामभिक्षाचाया सुलभत्वात्। "वीसत्थसुहावासा" विश्वस्तोनिर्भय सुखमावासोलोकानांयस्यां सा तथा, "अणेगकोडीकोडुम्बियाइस्सणिवुत्तसुहा" अनेककोटीभिरनेककोटीसंख्यकैः कौटुम्बिकैराकीर्णा निर्वृत्ता सन्तुष्टजनयोगातशुभाशुभवस्तुपेतत्वात तत' पदद्वयकर्मधारय'। "नडनट्टगजल्लमल्लमुट्ठिय वेलम्बगकहगपवकलासक आइक्खगलंखमंखतूणइल्लतुंबवीणियअणेगतालायराणुचरिया"। नट नाटकानां नाटयितारो नर्त्तकायेनृत्यन्ति, जल्लाराज्ञ स्तोत्रपाठका मल्ला प्रतीतामौष्टिकामल्ला एवयेमुष्टिभि प्रहरन्ति, विडम्बकाविदूषका कथका प्रतीता प्लवकायेउत्प्लवन्ते नद्यादिकं वा तरन्ति, लासका येरासकान् गायन्ति जयशब्दोप्रयोक्तारोवभाण्डाइत्यर्थ', आख्यायिका येशुभा शुभमाख्यान्ति लंखा महावंशाग्रखेलका मंखाश्चित्रफलकहस्ताभिक्षाका। "तूणइल्ला।" तूणाभि धानवाद्यविशेषवन्त। "तुम्बवीणिका" तुम्बवीणावादका, अनेकेचयेतालाचारास्तालादानेनप्रेक्षाका रिण एते सर्व्वैरनुचरिता आसेविता या सा तथा। "आरामुज्जाणअगडतलागदीहियवप्पिणगुणोववेया" आरामा यत्रमाधवीलतागृहादिषु दम्पत्यागत्यादिन्योरमन्ते उद्यानानिपुष्पादिमद्दृक्षसंकुलान्युत्सवादौ बहुजनभोग्यानि। "अगडत्तिअवटा कूपा" तडागानिप्रतीतानि दीर्घिका सारिण्य वप्पिणकेदारा एतेगुणोपपेता रम्यतादिगुणोपपेता यस्यां सा तथा। "उव्विद्धविउलगंभीरखातफलिहा" उपविद्ध उद्दं विपुलविस्तीर्ण गम्भीरमलभ्यमध्यं खातसुपरिविस्तीर्णमध संकुचितं परिखाच अधउपरिवसम खातरूपा यस्यांसातथा। "चक्कगयमुसंढिउरोहसयग्घिजमलकवाडघनदुप्पावेसा" चक्राणिप्रहरण विशेषरूपाणि गदाप्रहरणविशेषा मुषंढयोप्येव रूपा अवरोध प्रतोलीद्वारेभन्त प्राकारस्याभ्यन्तरे शतघ्नीमहायष्ट्योमहाशिलावाया पातिता शतानिपुरुषाणांघ्नन्ति यमलानिसमस्थेतद्द्वयरूपाणि यानि कपाटानिघनानिनिश्छिद्राणितैरपिदुर्प्रवेशा या सा तथा। "धणुकुडिलवंकपागारपरिक्खित्ता।" धनु कुटिलं कुटिलंधनुस्ततोपिवक्र अमकारेणपरिक्षिप्ता या सा तथा। "कविसीसयवट्टरइयसंठियवि रायमाणा।" कपिशीर्षकैव्रत्तरचितसंस्थितैर्व्वृत्तं सुकृतसंस्थानैर्वि राजमाना शोभमाना सा तथा। "अट्टालयचरियदारगोपुरतोरणउन्नयसुविभत्तरायमग्गा।"अट्टालिका प्राकारोपरिभृत्याश्रयविशेषा चरिकाअष्टहस्तप्रमाणोमार्ग, द्वाराणिभवनदेवकुलादीनां गोपुराणिप्राकारद्वाराणि तोरणानिच उन्नतानि उच्चानियस्यां सा तथा सुविभक्ताविविक्ताराजमार्गायस्यां सा तथा तत' पदद्वयस्य कर्म्मधारय'। "छेयायरियरइयदढफलिहइंदकीला।" छेकेन निपुणेनाचार्येण शिल्पपाध्यायेनरचितो

---

पूर्विकुती भगवंतादिक अतिसमिसिनग सूत्रजपरतत्रमभूयरहित धनधानिसहित यावभटं शब्द

तत्त्व किं विशिष्टमित्याह । चिरातीतेति पुराणेयावच्छब्दकारणात् "सद्दियकित्तिएनाएसछत्ते सज्भए" इत्याद्यौपपातिकग्रन्थप्रसिद्धवर्णकपरिग्रहः । एवं रूप च चैत्यवर्णकमुक्त्वा वनखण्डवक्तव्यता वक्तव्या । सा चैव "सेणंपवसालवणेचेइए एगेणंमहयावणखंडेणं सव्वतो समन्ता संपरिक्खित्ते" । "सेणंवणसंडेकिण्हेकिण्होभासेइत्यादि" । यावत् । "पासाइएदरसणिज्जेअभिरूवेपडिरूवे" । तत्र प्रसादीयं कृष्णावभासत्वादिना गुणेन मनः प्रसादहेतुत्वात् दर्शनीयं चक्षुरानन्दहेतुत्वात् अभिरूप प्रतिरूपशब्दार्थी प्राग्वत् । तत उक्तं । (ज्ञावपडिरूवेअसोगेत्यादि) । अशोकपादपस्य पृथिवी शिलापट्टकस्यच वक्तव्यता अपपातिकग्रन्थानुसारेण ज्ञेया । "सावेवंतस्सणं वणखंडस्स वहुमज्झ देसभागे इत्थणं महं एगेअसोगवरपायवे पन्नत्ते, जावपडिरूवे" । "सेणंअसोगवरपाय वेअन्नेहिंच बहुहिंतिलएहिंजावनन्दिरुक्खेहिं सव्वतो समन्ता सपरिक्खित्ते तेणं तिलगा जावनन्दिरुक्खाकुसविकुसविसुद्धरुक्खमूला मूलमन्तीकंदमन्तो जावपडिरूवा"। "तेणं तिलगा जावनन्दिरुक्खा अन्नाहिं बहूहिं पउमलयाहिं नागलयाहिं असोगलयाहिं" । "भूयलयाहिं वणलयाहिं वासन्तियलयाहिं अइमुत्तयलयाहिं कुन्दलयाहिं सामलयाहिं सव्वतो समन्तासंपरिक्खित्ता" । "ताउणंउमलयाउजावसामालाउतिच्चंकुसुमियाउजावपडिरूवाउ" । "तस्सणं असोगवरपायवस्सउवरिं बहवेअट्ठ मंगलगापन्नत्ता" । "तंजहा" । "सोत्थिय सिरिवच्छनंदियावत्तवद्धमाणगभद्दासणकलसमच्छदप्पणा सव्वरयणा मया अच्छासण्हा लण्हा" । "घट्टामट्ठाणीरया णिम्मलानिप्पंका निक्कंकटच्छाया सप्पभाससिरीया सउज्जोया पासा ईया दरिसणिज्जा अभिरूवा पडिरूवा" । "तस्सणं असोगवरपायवस्सउवरिं बहवे किण्हचा मरज्झया नीलिचामरज्झया हालिद्दचामरज्झया सुक्किल्लचामरज्झया अच्छा, सण्हालण्हारूप पट्टावइरामयदण्डा जलयामलगन्धिया सुरम्मापासाईया दरिसणिज्जा अभिरूवा पडिरूवा तस्सणं असोगवरपायवस्सउवरिं बहवेच्छत्ताइच्छत्तपडागातिपडागा घंटाजुयला चामरजुयलाउप्पलहत्थ गा पउमहत्थगा कुसुयहत्थगा नलिणहत्थगा सुभगहत्थगा सोगन्धहत्थगा पोण्डरियहत्थगा महापोण्डरीयहत्थगा सहस्सपत्तहत्थगा" । "सव्वरयणामया अच्छाजावपडिरूवा" । "तस्सणं असोगवरपायवस्सहेट्ठाइत्थणं महाएगेपुढविसिलावट्टएपन्नत्ते ईसिखंधसमल्लीणे विक्खंभायामसु-प्पमाणे किण्हे अंजणगघण कुवलयहलहरकोसज्जसरिसे आगासकेसकज्जलकक्केयणइंदनीलअय सिकुसुमप्पगासे" । भिंगंजण सिंगभेयरिट्ठगुलियगवलाइरेग भमरनिकुरुंबभूते जम्बूफल असण-कुसुमबन्धणनीलुप्पलपत्तमिगरमरगया सासगचयणकायारासिवन्नेनिद्धे घणेअज्झुसिरे रूवगपडि रूवदरिसणिज्जे आयंसगतलोवमे सुरम्मेसीहासणसंठिए सुरूवेमुत्ताजालखाइयन्तकम्मे" । "आईण गरूयपूरणवणीयतूलफासे सव्वरयणा मएअच्छेज्जावपडिरूवे" इति अस्यत्याख्या । तस्यणमिति पूर्ववत् वनखण्डस्य बहुमध्यदेशभागे अत्र एतस्मिन् प्रदेशे, महान् एकोऽशोकवरपादपः प्रज्ञप्तः तीर्थंकरगणधरैः सचकिम्भूतइत्याह । जावपडिरूवे अत्र यावच्छब्देन ग्रन्थान्तरप्रसिद्धं विशेषणजातं

क्ष

कप्पाए णयरीए बहिया उत्तरपुरत्थिमे दिसीभाए, अम्बसालवणे णामं चेइए होत्था पोराणे, जावपडिरूवे असोयवरपायवे पुढविसिला वट्टए वत्तव्वया

---

उद्विद्धवान् परिघोऽर्गला इन्द्रकीलश्च संघाटितकपाटद्वयाधारभूतः प्रवेशमध्यभागो यस्यां सा तथा। "विवणिवणिछेत्तसिप्पियाइण्णनिव्वुयसुहा"। विपणीनां वणिक्पथानां हट्टमार्गाणां वणिजां च क्षेत्रं स्थानं सविपणिवणिक्क्षेत्रं, तथा शिल्पिभिः कुम्भकारादिभिर्निर्वृत्तैः सुखिभिः शुभैः स्वस्वकर्म कुशलैराकीर्णोत्कृष्टा त्वात्त्वस्तत्र अन्यथा पदोपन्यासः ततः पूर्वपदेन कर्मधारयः। "सिंघाडगतियचउक्कचच्चरपणियावणविविहवसुपरिमण्डिया"। शृङ्गाटकत्रिकचतुष्कचत्वरैः पणितानि क्रयाणि तत्प्रधानेषु आपणेषु यानि विविधानि वस्तूनि द्रव्याणि तैश्च परिमण्डिता शृङ्गाटकं त्रिकोणं स्थानं त्रिकं यत्र रथ्यात्रयं मिलति चतुष्कं रथ्याचतुष्टयमीलनात्मकं चत्वरं बहुरथ्यापातस्थानं सुरम्या अतिरम्या। "नरवइपविइण्णमहिवइपहा"। नरपतिना राज्ञा प्रविकीर्णो गमनागमनाभ्यां व्याप्तो महीपतिपथो राजमार्गो यस्यां सा तथा। "अणेगवरतुरगमत्तकुञ्जररहपहकरसीयसंदमाणी आइण्णजाणजुग्गा" अनेकैर्वरतुरगैर्मत्तकुञ्जराणां रथानां च पहकरैः सङ्घातैस्तथा शिबिकाभिः स्यंदमानीभिर्यानैर्युग्यैश्चाकीर्णा व्याप्ता सा तथा। आकीर्णशब्दस्य मध्यनिपातः प्राकृतत्वात् तत्र शिबिका। कूटाकारेणाच्छादिता जंपानविशेषाः स्यन्दमानिकाः पुरुषप्रमाणा जंपानविशेषाः यानानि शकटादीनि युग्यानि गोल्लविषयप्रसिद्धानि द्विहस्तप्रमाणानि वेदिकोपशोभितानि जंपानान्येव। "विमउलनवनलिणसोभियजला" विमुकुलैर्विकसितैर्नवैर्नलिनैः कमलैः शोभितानि जलानि यस्यां सा तथा। "पंडरभवणपंतिमहिया उत्ताणयनयणपिच्छणिज्जा पासादीया इत्यादि"। प्रासादेषु भवा प्रासादबहुलेत्यर्थः अत एव दर्शनीया द्रष्टुं योग्या प्रसादा आमति रमणीयत्वात्। तथा अभिद्रष्टृन् प्रतिप्रत्येकमभिमुखमतीवचेतोहारित्वात्। रूपमाकारो यस्या सा अभिरूपा। एतदेवव्याचष्टे प्रतिरूपा प्रतिविशिष्टमसाधारणं रूपमाकारो यस्याः सा प्रतिरूपा (तीसेणमित्यादि)। तस्यां णमिति पूर्ववत्। आमलकल्पायां नगर्यां बहिरुत्तर पौरस्त्ये उत्तरपूर्वारूपे ऐशानकोण इत्यर्थः। दिग्भागे (अंबसालवणेइति) आम्रैः शालैश्चातिप्रचुरतयो पलक्षितं यद्वनं तदाम्रशालवनं तद्योगाच्चैत्यमपि आम्रशालवनं चितेर्लेप्यादिचयनस्य भावः कर्म वा चैत्यं तच्च संज्ञाशब्दत्वात् देवता प्रतिबिम्बे प्रसिद्धं। ततस्तदाश्रयभूतं यद्देवताया गृहं तदप्युपचारात् चैत्यं तच्चेह व्यन्तरायतनं द्रष्टव्यं नतु भगवतामर्हतामायतनं वीक्षा इति अभवर

---

अलकनगरीनउ चयकञ्चूविषउ प्रासादघणावउ अयबखिउनउ प्रासादकरउकार तैयार करया। तैमगरदिसवायोग्यवउ मनीबरूपवउ प्रतिरुपकविताक्या प्रसिक्षीमइनउलकबयार जिहमया तहाणा कारतैसन्योभाने अर्थेर आमलकप्पानगरीबउ बाहिर उत्तर पूर्वबचे दसविभागिन मानकूंषा अथवा आमवनतेपाइज भामइ चैत्ययततनकुतव जंतूबइ यावत् ग्रन्थ अमरूचैत्यनउ

तच्च किं विशिष्टमित्याह। चिरातीतं पुराणेयावच्छब्दकारणात् "सद्दिए कित्तिए नाए सछत्ते सज्झए" इत्यादीपपातिकग्रन्थप्रसिद्धवर्णकपरिग्रहः। एवं रूप च चैत्यवर्णकमुक्ता वनखण्डवक्तव्यता वक्तव्या। साचैवं "सेणं असोगवसालवणेचेइए एगेणं महयावणसंडेणं सव्वतो समन्ता संपरिक्खित्ते"। "सेणं वणसंडेकिण्हेकिण्होभासेइत्यादि"। यावत्। "पासाइए दरिसणिज्जे अभिरूवेपडिरूवे"। तत्र प्रसादीयं कृष्णावभासत्वादिना गुणेन मनः प्रसादहेतुत्वात् दर्शनीयं बहुरानन्दहेतुत्वात् अभिरूप प्रतिरूपशब्दार्था प्राग्वत्। तत उक्तं। (जावपडिरूवेअसोगेत्यादि)। अशोकपादपस्य पृथिवी शिलापट्टकस्यच वक्तव्यता औपपातिकग्रन्थानुसारेण ज्ञेया। "सावेवंतस्सणं वणसंडस्स बहुमज्झ देसभागे इत्यर्थं मणं एगे असोगवरपायवे पन्नत्ते, जावपडिरूवे"। "सेणं असोगवरपाय वेअन्नेहिंच बहुहिंतिलएहिंजावनन्दिरुक्खेहिं सव्वतो समन्ता सपरिक्खित्ते तेणंतिलगा जावनन्दिरुक्खाकुसविकुसविसुद्धरुक्खमूला मूलमन्तोकंदमन्तो जावपडिरूवा"। "तेणं तिलगा जावनन्दिरुक्खा अन्नाहिं बहुहिं पउमलयाहिं नागलयाहिं असोगलयाहिं"। "भूयलयाहिं वणलयाहिं वासन्तियलयाहिं अइमुत्तयलयाहिं कुन्दलयाहिं सामलयाहिं सव्वतो समन्तासंपरिक्खित्ता"। "ताउणंपउमलयाउजावसामालयाउतिच्चंकुसुमियाउजावपडिरूवाउ"। "तस्सणं असोगवरपायवस्सउवरिं बहवेअट्ठट्ठ मंगलगापन्नत्ता"। "संजहा"। "सोत्थिय सिरिवच्छनंदियावत्तवद्धमाणगभद्दासणकलसमच्छदप्पणा सव्वरयणामया अच्छासण्हा लण्हा"। "घट्ठामट्ठाणीरया णिम्मलानिप्पंका निक्कंकडच्छाया सप्पभाससिरीया सउज्जोया पासा इया दरिसणिज्जा अभिरूवा पडिरूवा"। "तस्सणं असोगवरपायवस्सउवरिं बहवे किण्हचा मरज्झया णीलितचामरज्झया हालिद्दचामरज्झया सुक्किलचामरज्झया अच्छा, सण्हालण्हारूप्प पट्टावइरामयदण्डा जलयामलगन्धिया सुरम्मापासाईया दरिसणिज्जा अभिरूवा पडिरूवा तस्सणं असोगवरपायवस्सउवरिंबहवेछत्ताइछत्तापडागातिपडागा घंटाजुयला चामरजुयलाउप्पलहत्थ गा पउमहत्थगा कुमुयहत्थगा णलिणहत्थगा सुभगहत्थगा सोगन्धहत्थगा पोण्डरियहत्थगा महापोण्डरीयहत्थगा सहस्सपत्तहत्थगा"। "सव्वरयणामया अच्छाजावपडिरूवा"। "तस्सणं असोगवरपायवस्सहेट्ठापत्थणं महाएगेपुढविसिलावट्टए पन्नत्ते ईसिखंधसमल्लीणे विक्खंभायामसु प्पमाणे किण्हे अंजणगघण कुवलयहलहरकोसेज्जसरिसे आगासकेसकज्जलककीयणखंदणीलपय सिकुसुमप्पगासे"। भिंगेजण सिंगभेयरिट्ठगुलियगवलाइरेग भमरनिकुरंबभूते जम्बूफल असण कुसुमबन्धणनीलुप्पलपत्तनिगरमरगया सासगबयणकायारासिवन्ननिद्धे घणेअब्भुसिरे रूवगपडि-रूवदरिसणिज्जे आयंसगतलोवमे सुरम्मेसीहासणसंठिए सुरूवेमुत्तजालखइयन्तकम्मे"। "आईण गरुयपूरणवणीयतूलफासे सव्वरयणा मए अच्छेजावपडिरूवे" इति अस्यव्याख्या। तन्मध्यमिति पूर्ववत् वनखण्डस्य बहुमध्यदेशभागे अत्र एतस्मिन् प्रदेशे महान् एकोऽशोकवरपादपः प्रज्ञप्तः स्तीर्थंकरगणधरैः सचकिम्भूतइत्याह। जावपडिरूवे अत्र यावच्छब्देन ग्रन्थान्तरप्रसिद्धं विशेषणजातं

सूचितं तच्चेदम्,—"दूरुग्गयकन्दमूलवट्टलट्ठसंठियसिलिट्ठ, घणमसिणनिद्धअणुपुव्विसुजाय निरुवहती विहिपवरखन्धी अणेगणरपवरभुयागेज्झे कुसुमभरसमोणमन्तपत्तलविसालसाले। महुकरिभमरगणगुमगुमाइयनिलिंतउड्डिन्तसस्सिरीए णाणासउणगणमिहुणसुमहुरकन्न सुहपलत्तसद्द महुरे कुसविकुसविसुद्धरुक्खमूले पासाइए दरिसणिज्जे अभिरूवे पडिरूवे" तत्र दूरमुद्गतवत्येन गतं कन्दस्याधस्तात् मूलं यस्य स दूरोद्गतकंदमूलस्तथावृत्तोवृत्तभावेन परिणत एवंनाम सर्वासुदिक्षु विनिःसृत शाखाभिःप्रशाखाभिश्च प्रसृतो यथा वर्तुलः प्रतिभासते इति, तथा लष्टोमनोज्ञः संश्रय शाखागता यस्य स लष्टसंस्थितस्तथाश्लिष्टोऽन्योऽन्यं पादपैः सहासंपृक्तोविविक्त इत्यर्थः । ततो विशेषण समासः सत्र पदद्वय १ मीलनेनाविशेयो बहूनां पादानां विशेषणसमासानभ्युपगमात्। तथा घनोनिविड़ो मसृणः श्लक्ष्णत्वक् न कर्कशस्पर्शः स्निग्धः शुभकान्तिः आनुपूर्व्यामूलादि परिपाट्या जन्मदोषरहितं यथा भवति एवं जातआनुपूर्वीसुजात, तथा निरुपहत उपदेहिकादुप द्रवरहित उद्विद्ध उच्चः प्रवरप्रधानःस्कन्धी यस्य स घनमसृणस्निग्धानुपूर्वीसुजातनिरुपहतोऽनिद्ध प्रवरस्कन्धः तथा अनेकस्य मनुष्यस्ययेप्रवरा प्रशस्ताभुजावाहवस्तैरग्राह्योऽपरिमेयोऽनेकनरप्रवर भुजाग्राह्योऽनेकपुरुषव्यामैरप्य प्रतिमेयस्थौल्य इत्यर्थः । तथा कुसुमभरेण पुष्पसम्भारेण समी पदवनमत्यःपत्रसमृद्धाः पत्रसमिद्धन्ति स्कःघपिलसमिति वचनात् विशालाविस्तीर्णाःशाखाश्चा यस्य स कुसुमभरसमवनमत्पत्रलविशालशाखः । तथा मधुकरीणां च ये गुणा गुमगुमायिता गुमगुमायन्तिस्म कर्मकर्तृत्वात्कर्त रिक्तप्रत्ययो गुमगुमेतिशब्दं कृतवन्तः सन्त इत्यर्थो निलीयमाना आश्रयन्त उड्डीयमानस्ताप्रत्यासन्नमाकाशे परिभ्रमन्तस्तैःसश्रीकः मधुकरीभ्रमरगणगुमगुमायितनि लीयमानोड्डीयमानसश्रीकः । तथा नानाजातीयानां शकुनगणानां यानि मिथुनानि स्त्रीपु सयुग्मानि तेषां प्रमोदवशतोयानि परस्परसुमधुराण्यतएवकर्णसुखानि कर्णसुखदायकानि प्रलप्तानि भाष णानि शकुनगणानां हि खेच्छया क्रीड़तां प्रमोदभरवशतोयानि भाषणानि तानि प्रलिप्तानीति प्रसिद्धानि ततः प्रलप्तैरुक्तः तेषां य शब्दोध्वनि स्तेन मधुरो नानाशकुनगणमिथुनसमधुरकर्णसुख प्रलप्तशब्दमधुरः। तथा कुशदर्भादयो विकुशावल्वजादयस्तैर्विशुद्धं रहितं वृक्षस्य आलवाल शोकपादपस्य वृक्षमूलं शाखादीनामपि आदिमोभागो वक्षवया प्रोच्यते यथा शाखामूलमिदं प्रशाखामूलमित्यादि ततः सकलाशोकपादपसक्तमूलप्रतिपत्तये वृक्षगृहणं मूलं यस्य स कुशविकुशविशुद्धवृक्षमूलः । यश्चैवं विधः सद्दृष्टृणां चित्तसन्तोषाय भवति तत आह प्रसादीयः प्रसादाय चित्तसन्तोषाय हितस्तत्कृत्पादकत्वात् प्रसादीयो अतएव दर्शनीयो द्रष्टुं योग्यः कस्मा दित्याह अभिरूपो द्रष्टारं २ प्रत्यभिमुखं न रूपं चित्तिरागहेतुरूपमाकारो यस्यसोऽभिरूपः। एवं रूपीकृतइत्याह। प्रतिरूपः प्रतिविशिष्टं सकलजगदसाधारणं रूपं यस्य स प्रतिरूपः। "अयं असोगवरपायवेइत्यादि जावनन्दिरुक्खेहिं" इत्यत्र यावत्करणात् "लउएहिं छत्तो वगेहिं सिरीसेहिं सत्तवन्नेहिं दहिवन्नेहिं लोद्धेहिं धवेहिं चन्दणेहिं अज्जुणेहिं नोमेहिं कुडएहिं

फणिसेहिं। दालिमेहिं सालेहिं तालेहिं तमालेहिं पियएहिं रायरुक्खेहिं" इति परिगृह्य। एतेच लवकुचनीपशिरीष सप्तपर्णदधिपर्णलोध्रकधवचन्दनार्जुननीपकदम्बपनसदाडिमतालतमालप्रियाल प्रियंगुराजवृक्ष नन्दिवृक्षाः प्रायः सुप्रसिद्धाः। "तेणं तिलगा जावनन्दिरुक्खा कुसविकुसेत्यादि" ते तिलकायावन्नन्दिवृक्षाकुशविकुशविशुद्धवृक्षमूला एव व्याख्या पूर्ववत्। मूलवन्त मूलानि प्रभूतानि दूरावगाढानि सन्त्येषामिति मूलवन्तः कन्दएषामस्तीति कन्दवन्तः, यावच्छब्दकरणात् "खन्धिमन्तो तयामन्तो सालमन्तोपवालमन्तो पत्तमन्तोपुप्फमन्तो वीयमन्तो पणुपुव्विसुजायरुइल वट्टभावपरिणया एगखंधी पणेगसाहप्पसाहविडिमा पणेगनरवामसुप्पसारियपगिज्झघणविपुल वट्टखंधी पच्छिद्दपत्ता पविरलपत्ता पवाईणपत्ता पणईइपत्ता णिद्धुयजरढपण्डुपत्ता नवहरिय भिसन्तपत्तभारन्धयारगम्भीरदरिसणिज्जा। उवनिग्गय नवतरुणपत्तपल्लवकोमलउज्जलचलंत किसलसुकुमालपवालसोभियपवरकुरंगसिहरा निच्चंकुसुमिया निच्चंमउलिया निच्चंलवइया निच्चं थोच्छिया निच्चंजमलिया निच्चंजुयलिया निच्चंविणमिया निच्चपणामिया निच्चंकुसुमियमउलि यलवइयथवइयगुलइयगुच्छियजमलियजुयलियविणमियपणामियसुविभत्तिए डिमञ्जरि वडिंसयधरा सुकवरहिणमयणसलागाकोइलकोरगकभिंगारक कोण्डलकजीवञ्जीवक नन्दीमुहकविलपिंगल क्खगकारण्डवचक्कवाग कलहंस सारस पणेगसउणगणमिहुणविरियसद्दोन्नय महुसर णाइया, सुरम्मा संपिण्डियदरियभमर महुयरिपहकरपरिलिन्तमत्तछप्पय कुसुमासवलोलमहुर गुमगुमन्तगुञ्जन्तदेसभागा। पब्भिन्तरपुप्फफला बाहिरपत्तोच्छण्णापत्ते हिय पुप्फेहियउच्छपलि च्छत्तानिरोगकासाउफलानिद्दफला। पकण्टकाणाणाविहगुच्छगुम्ममण्डवगसोहियाविचित्तसुह केउपभूया। वाविपुक्खरिणिदीहियासुयसुनिवेसियरम्मजालयरगा पिण्डिमनीहारिमसुगन्धिसुह सुरभिमणहरम्बमहया गन्धद्धणिमुयन्तासुहसेउकेउबहुला। पणेगसगडजाणजुग्गगिल्लि थिल्लिसीयसन्दमाणियपडिमोयणा पासाईयादरिसणिज्जा पभिरूवा" इतिपरिगृह्य पस्य व्याख्या। इह मूलानि सुप्रतीतानि यानि कन्दस्याधः प्रसरति कन्दास्तेषां मूलानामुपरि वर्त्तिनः रते पपि प्रतीता स्कन्धीघुडं त्वक् छल्लीशाखा शाखा प्रवाल पल्लवाङ्कुरः। पत्रपुष्पफलबीजानि सुप्रसिद्धानि सर्वत्राणिप्रायेन क्वचित् भूम्निवामनुप्रत्ययः। "पणुपुव्वसुजायरुइलवट्टभाव परिणया" इति पनुपूर्व्यामूलादि परिपाट्या सुष्टुजाता पानुपूर्वीसुजाता २ रुचिरा स्निग्धतयादेदीप्यमान-च्छविमन्तः तथा वृत्तभाव न परियाता किमुक्तम् भवति। एवं नाम शाखासुदिक्षुचशाखाभिश्च प्रसृता यथा वर्त्तुला सञ्जाता इति पानुपूर्वीसुजाताश्चते रुचिराश्च पानुपूर्व्वीसुजात रुचिरास्तेच ते वृत्तभाव परियाता पानुपूर्वीसुजातरुचिरवृत्तभाव परियाता। ते तथा तिलका दयः पादपाः प्रत्येकमेकस्कन्धाप्राकृतेचास्य स्त्रीत्वमितिएगखन्धी इति मूलपाठः। तथा पनेकाभिः शाखाभिश्च मध्यभागेविटापोविस्तारी येषां ते तथा। तथा तिर्यक्बाहुद्वयप्रसारणा प्रमाणो व्याम व्यामीयते परिच्छिद्यते रज्ज्वाद्यनेनेतिव्यामः। बहुलवचनात करणेकविदितिप्रत्ययः।

अनेकैनरव्यामैः पुरुषव्यामैः सुप्रसारितैरग्राह्योऽप्रमेयो घनीनिविडोविपुलोविस्तीर्णोवृत्त स्कन्धो येषां ते अनेकनरव्यामसुप्रसारितागृाह्यायनविपुलवृत्तस्कन्धा। तथा अच्छिद्राणि पत्राणि येषां ते अच्छिद्रपत्रा, किमुक्तम्भवति। न तेषां पत्रेषु वातदोषत कालदोषतो वा गड्डरिकादि रीतिरुपजातोयेन तेषु पत्रे छिद्राण्यभविष्यन्नितीत्यच्छिद्रपत्रा। अथवा एव मामान्योन्य शाखाप्रशाखानुप्रवेशात्पत्राणि पत्रावामुपरिज्ञातानि येन मनागप्यपान्तरालरूपं छिद्रनीपलक्ष्यते इति तथा चाह। "अविरलपत्ता इति"। अत्र हेतौ प्रथमातत्तोऽयमर्थ। यतोऽविरलपत्रा इति अपि कुतइत्याह। अवातीतपत्रा, वातीनानि वातीपत्तानि वातेनपातितानीत्यर्थ। न वातीनानि अवातीनानि पत्राणि येषां ते तथा किमुक्तं भवति न प्रबलेन खरपरुषेण वातेन तेषां पत्राणि भूमौ निपात्यन्ते ततो अवातीनपत्रत्वादविरलपत्रा इति। अच्छिद्रपत्रा इत्यत्र प्रथम व्याख्यानपक्षमधिकृत्य हेतुमाह। "अणईइपत्ता" नविद्यते इति, गड्डरिकादिरूपा येषां तान्य नीतीनि पत्राणि येषां ते अनीतिपत्रा, अनीतिपत्रत्वच्चाच्छिद्रपत्रा। "निद्धुयजरढपण्डुपत्ता" इति निधूतानि अपनीतानि जरठानिपाण्डुपत्राणि येभ्यस्ते निधूतजरठपाण्डुपत्रा किमुक्तं भवति वाणि वृक्षस्थानि जरठानि पाण्डुपत्राणि वातेननिर्धूयनिर्धूयभूमौ पातितानि भूमेरपि च प्रायोनिर्धूय निर्धूयान्यत्रापसारितानीति। "नवहरियभिसन्तपत्तभारन्धयारगम्भीरदरिसणिज्जा" इति नवेन प्रत्यग्रे ण हरितेन नीलेन भासमानेन स्निग्धत्वचादीप्यमानेन पत्रभारेण दलसञ्चयेन योऽन्धकारस्तेन गम्भीरा अदृश्यमध्यभागा सन्तोदर्शनीया नवहरितभासमानपत्रभारान्धकारगम्भीर दर्शनीया। तथा उपविनिर्गतैरिति भाव। नव तरुणपत्रपल्लवैस्तथा कोमलैर्मनोज्ञैश्चञ्चद्भिः शुद्धैश्चलद्भिरीषत्कम्पमानैः किसलयैरवस्थाविशेषोपेतैः पल्लवविशेषैस्तथासुकुमारैः प्रवालै पल्लवांकुरैः शोभितानि वरांकुराणि वराङ्कुराग्रोपेतानि अग्रशिखराणि येषां ते उपनिर्गतनव तरुणपत्रपल्लवकोमलोज्ज्वलचलत्किसलयसुकुमार प्रवालशोभितवराङ्कुराग्रशिखरा। इहाङ्कुर प्रवालयो कालकृतावस्थाविशेषादिशेषोभावनीय। तथा नित्यसर्वकालं षट्स्वपिऋतुष्वित्यर्थं। कुसुमिता कुसुमानि पुष्पाणि सञ्जातान्येषामिति कुसुमिता तारकादि दर्शनादिसप्रत्यय "निच्चमउलिया" इति नित्यं सर्वकालं मुकुलिता मुकुलानि नामकुड्मलानि कलिकाइत्यर्थ "निच्च लवइया" इति पल्लविता "निच्चंथवइया इति स्तबकिता स्तबकभारवन्त इत्यर्थ निच्च गुलुइया इति गुल्मिता स्तबकगुल्मौ गुच्छविशेषौ नित्यं गोच्छितो गोच्छवन्त नित्यं यमलिता यमलन्नामसमानजातीययोर्युग्म तत् सञ्जातमेषामिति यमलिता नित्यं युगलिता युगलं सजातीय विजातीययोर्द्वन्द्वन्तदेषां सञ्जातमिति युगलितास्तथा नित्यं सर्वकालं फलभारेण विनता ईषन्नता तथा नित्यं प्रणता फलभारेण प्रकर्षं तोऽति दूरनता प्रणता। तथा नित्यं सर्वकाल सुविभक्तास्तु विच्छित्तिक प्रतिविशिष्टमञ्जरीरूपोयोऽवतंसक्त शेखरास्तद्धारिण। एव सर्वेषि कुसुमितत्वादिको धर्मएकैकस्य वृक्षस्योक्त साम्प्रतङ्केषांचिद्धाणां सकल कुसुमितत्वादिक

धर्मप्रतिपादनार्थमाह। "निच्चकुसुमियमउलिये"त्यादि किमुक्तं भवति केचित्कुसुमितार्थ केचित् गुणयुक्ता, केचिच्छमस्तकुसुमितादि गुणयुक्ता इति, अतएव "कुसुमयमाइये" इत्यादि पदेषु कर्मधारय। तथा शुकवर्हिण मदनशालिका कोकिलाकोरककोभक भिङ्गारक कोण्डलक जीवं जीवक नन्दीमुख कपिल पिङ्गलाचकारण्डव चक्रवाक कलहंससारसाख्यानां अनेकेषां शकुन गणानां मिथुनै स्त्रीपुंसयुग्मै र्यैर्त्विचरितमितस्ततोगमनम्, यथा शब्दोन्नतिकं उन्नतशब्दकं मधुरस्वरञ्चनादित लपितं येषु ते तथा, अतएव सुरम्या सुन्दररमणीया। अत्र शुका कीरा वर्हिणोमयूरा मदनशालिका शारिका कोकिला पिका चक्रवाककलहंससारसा प्रतीता शेषास्तु जीवविशेषा लोकतो वेदितव्या, स्तथा सम्पिण्डिता एकत्र पिण्डीभूता दृप्ता मदोन्मत्ततया दर्पाध्माता भ्रमरमधुकरीणाम्पहकरा सङ्घाता, "पहकरपरोहसङ्घाया" इति देशीनाममाला वचनात् यत्र ते सम्पिण्डितदृप्तभ्रमरमधुकरीपहकरा, स्तथा परिलीयमाना अन्यत आगत्या श्रयतीमत्ता षट्पदा कुसुमासवलोला किञ्जल्कपानलम्पटा मधुर गुमगुमायमाना गुञ्जन्तश्च शब्दविशेषं च विदधाना देशभागेषु येषां ते परिलीयमानमत्तषट्पदकुसुमासवलोलमधुरगुमगुमाय मानगुञ्जन्तदेशभागा। गमकत्वादेवमपि समास, स्ततो भूय पूर्वपदेन सह विशेषण समास। तथा अभ्यन्तराणि अभ्यन्तरभागवर्त्तीनि, पुष्पाणि च फलानि च पुष्पफलानि येषां ते तथा। "बाहिरपत्तोच्छण्णा" इति बहित पत्रैश्छन्ना व्याप्ता बहि पत्रछन्ना स्तथा पत्रैश्च पुष्पैश्च अवच्छन्नपरिछन्ना अत्यन्तमाच्छादिता, स्तथा नीरोगकारोगवर्ज्जिता अकण्टका कण्टकरहिता न तेषां प्रत्यासन्नाबब्बूलादि वृक्षा सन्तीतिभाव, तथा स्वादूनि फलानि येषां ते स्वदुफला स्तथा स्निग्धानि फलानि येषां ते स्निग्धफला स्तथा प्रत्यासन्नैर्नानाविधैर्नाना प्रकारै गुच्छैर्वृन्ताकीप्रभृतिभि र्गुल्मै र्नवमालिकादिभिर्मण्डपकै शोभिता नानाविधगुच्छगुल्म मण्डपकशोभिता स्तथा विचित्रै र्नानाप्रकारै शुभैर्मङ्गलभूतैः केतुभि ध्वजै र्बहुला व्याप्ता विचित्रशुभकेतुबहुला तथा "वाविपुक्खरिणीदीहियासुयसुनिवेसियरम्मजालघरगा," वाप्यश्चतुर स्राकारास्तएव वृत्ता पुष्करिण्यो यदि वा पुष्कराणि विद्यन्तेयासु ता पुष्करिण्ये दीर्घिका ऋजुसारिण्य वापीषु पुष्करिणीषु दीर्घिकासु च सुष्ठुनिवेसितानि रम्याणि जालगृहकानि येषु ते वापीपुष्करिणीदीर्घिकासु सुनिवेशितरम्यजालगृहका। तथा पिण्डिमा पिण्डिता सती निर्हारिमादूर विनिर्गच्छन्ती पिण्डिमनिर्हारिमा तां सुगन्धिंसद्गन्धिका शुभसुरभिरण्यो गन्धा न्तरेभ्य सकाशात् समीहर शुभसुरभिममोहरा तां च "महया" इति प्राकृतत्वात्। द्वितीयार्थे तृतीया महतीमित्यर्थ। "गन्धधुणिं" यावन्निर्गन्धिपुद्गलैर्गन्धिविषयेघ्राणिरुपजायते, तावती गन्धपुद्गलसंहतिरुपचारात् गन्धघ्राणिरित्युच्यते तान्निरन्तर मुञ्चन्त। तथा "सुहसेउकेउ बहुला" इति शुभा प्रधाना सेतवोमार्गा आलवालपाल्यो वाकेतवो ध्वजा बहुलावञ्चो येषां ते तथा। "अणेगरहजाणजाणजुग्गगिल्लिथिल्लिसिवियपविमोयणा" इति, रथादिविधा क्रीडारथाः

अनेकैर्नरव्यामैः पुरुषव्यामैः समप्रसारितैरग्राह्योऽप्रमेयो घनोनिबिडोविपुलोविस्तीर्णोवृत्तः स्कन्धो येषां ते अनेकनरव्यामसुप्रसारितग्राह्यघनविपुलवृत्तस्कन्धाः। तथा अच्छिद्राणि पत्राणि येषां ते अच्छिद्रपत्राः, किमुक्तम्भवति। न तेषां पत्रेषु वातदोषतः कालदोषतो वा गड्डरिकादि रीतिरुपजातोयेन तेषु, पत्रे छिद्राण्यभविष्यन्निती त्यच्छिद्रपत्राः। अथवा एवं नामान्योन्य शाखाप्रशाखानुप्रवेशात्पत्राणि पत्राणामुपरिजातानि येन मनागप्यपान्तरालरूपं छिद्रमोपलक्ष्यते इति तथा चाह। "अविरलपत्ता इति"। अत्र इतो प्रथमातृतोऽयमर्थः। यतोऽविरलपत्रा इति अपि कुतइत्याह। अवातीतपत्राः वातीनानि वातोपहतानि वातेनपातितानीत्यर्थः। न वातीनानि अवातीनानि पत्राणि येषां ते तथा, किमुक्तं भवति न प्रबलेन खरसुरुषेण वातेन तेषां पत्राणि भूमौ निपात्यन्ते ततो अवातीनपत्रत्वादविरलपत्रा इति। अच्छिद्रपत्रा इत्यत्र प्रथम व्याख्यामपक्षमधिकृत्य हेतुमाह। "अणईइपत्ता" भविष्यते इति, गड्डरिकादिरूपा येषां तान्य नीतीनि पत्राणि येषां ते अनीतिपत्राः, अनीतिपत्रत्वाच्चाच्छिद्रपत्राः। "निद्धुयजरढपण्डुपत्ता" इति निर्धूतानि अपनीतानि जरठानि पाण्डुपत्राणि येभ्यस्ते निर्धूतजरठपाण्डुपत्राः किमुक्तं भवति यानि वृक्षस्थानि जरठानि पाण्डुपत्राणि, वातेननिर्धूयनिर्धूयभूमौ पातितानि भूमेरपि च प्रायोनिर्धूय निर्धूयान्यत्रापसारितानीति। "नवहरियभिसन्तपत्तभारन्धयारगम्भीरदरिसणिज्जा" इति नवेन प्रत्यग्रेण हरितेन नीलेन भासमानेन स्निग्धत्वचादीप्यमानेन पत्रभारेण दलसञ्चयेन योजातोऽन्ध कारस्तेन गम्भीरा अलक्ष्यमध्यभागा स्ततोदर्शनीया नवहरितभासमानपत्रभारान्धकारगम्भीर दर्शनीया। तथा उपविनिर्गतैरिति भावः। नव तरुणपत्रपल्लवैस्तथा कोमलैर्मनोज्ञैरुज्ज्वलै शुभैश्चलद्भिरीषत्कम्पमानैः किसलयैरवस्थाविशेषोपेतैः पल्लवविशेषैस्तथासुकुमारैः प्रवालै पल्लवांकुरैः शोभितानि वरांकुराणि वराङ्कुरोपेतानि अग्रशिखराणि येषां ते उपनिर्गतनव तरुणपत्रपल्लवकोमलोज्ज्वलचलत्किसलयसुकुमार प्रवालशोभितवराङ्कुराग्रशिखराः। इहाङ्कुर प्रवालयोः कृतावस्थाविशेषाद्विशेषोभावनीयः। तथा नित्यसर्वकालं षट्स्वपि ऋतुष्वित्यर्थः। कुसुमिताः कुसुमानि पुष्पाणि सञ्जातान्येषामिति कुसुमिताः तारकादि दर्शनादितप्रत्ययः "निच्चम्मउलिया" इति नित्यं सर्वकालं मुकुलिताः मुकुलानि नामकुड्मलानि कुड्मलाइत्यर्थः "निच्च लवइया" इति पल्लविताः "निच्चथवइया इति स्तबकिताः स्तबकभारवन्त इत्यर्थः नित्य गुलुइया इति गुल्मिताः स्तबकगुल्मौ गुच्छविशेषौ नित्यं गोच्छिताः गोच्छवन्तः नित्यं यमलिताः यमलन्नामसमानजातीययोर्युग्मं तत् सञ्जातमेषामिति यमलिताः नित्यं युगलिताः युगलं सजातीय विजातीययोर्द्वन्द्वन्तदेषां सञ्जातमिति युगलितास्तथा नित्यं सर्वकालं फलभारेण विनताः ईषन्नताः तथा नित्यं प्रणताः फलभरेण प्रकर्षतोऽतिदूरमताः प्रणताः। तथा नित्यं सर्वकालं सुविभक्तासु विच्छित्तिकः प्रतिविशिष्टोमञ्जरीरूपोयोऽवतंसस्तं शेखराश्चधारिणः। एष सर्वोऽपि कुसुमितत्वादिको धर्मएकैकस्य वृक्षस्योक्तः साम्प्रतमेकेषाञ्चिद्वाच्यो सकल कुसुमितत्वादिक

धर्म्मप्रतिपादनायमाह। "निच्चंकुसुमियमउलिये"त्यादि किमुक्तं भवति केचित्कुसुमिताद्येकैक गुणयुक्ता, केचित्समस्तकुसुमितादि गुणयुक्ता इति, अतएव "कुसुमयमालइये" इत्यादि पदेषु कर्म्मधारय। तथा शुकवर्हिण मदनशालिका कोकिलाकोरककोभक भिङ्गारक कोण्डलक जीवं जीवक नन्दीमुख कपिल पिङ्गलाचकारण्डव चक्रवाक कलहंससारसाख्यानां अनेकेषांशकुनगणानां मिथुनै स्त्रीपु सयुग्मै र्यंत्विचरितमितस्ततोगमनम, यथा शब्दोन्नतिकं उन्नतशब्दकं मधुरस्वरञ्चनादित लपितं येषु ते तथा, अतएव सुरम्या सुष्टुरमणीया। अत्र शुका कीरा वर्हिणीमयूरा मदनशालिका शारिका कोकिला पिका चक्रवाककलहंससारसा प्रतीता शेषास्तु जीवविशेषा लोकतो वेदितव्या, तथा सपिण्डिता एकत्र पिण्डीभूता दृप्ता मदोन्मत्ततया दर्पाध्माता भ्रमरमधुकरीणाम्पहकरा सङ्घाता, "पहकरअोरोहसङ्घाया" इति देशीनाममाला वचनात् यत्र ते सम्पिण्डितदृप्तभ्रमरमधुकरीपहकरा, तथा परिलीयमाना अन्यत आगत्या श्रयतोमत्ता षट्पदा कुसुमासवलोला किञ्जल्कपानलम्पटा मधुरं गुमगुमायमाना गुञ्जतश्च शब्दविशेषं च विदधाना देशभागेषु येषां ते परिलीयमानमत्तषट्पदकुसुमासवलोलमधुरगुमगुमाय मानगुञ्जन्तदेशभागा। गमकत्वादेवमपि समास, ततो भूय पूर्वपदेन सह विशेषण समास। तथा अभ्यन्तराणि अभ्यन्तरभागवर्त्तीनि, पुष्पाणि च फलानि च पुष्पफलानि येषां ते तथा। "बाहिरपत्तोच्छया" इति बहित पत्रैश्छन्ना व्याप्ता बहि पत्रछन्ना, तथा पत्रैश्च पुष्पैश्च अवच्छन्नपरिछन्ना अत्यन्तमाच्छादिता, तथा नीरोगकारोगवर्जिता अकण्टका कण्टकरहिता न तेषां प्रत्यासन्नाबब्बूलादि वृक्षा सन्तीतिभाव, तथा स्वादूनि फलानि येषां ते स्वदुफला तथा स्निग्धानि फलानि येषां ते स्निग्धफला, तथा प्रत्यासन्नैर्नानाविधैर्नाना प्रकारैः गुच्छैर्वृंताकीप्रभृतिभि गुल्मै नवमालिकादिभिर्मण्डपकै शोभिता नानाविधगुच्छगुल्म मण्डपकशोभिता तथा विचित्रै र्नानाप्रकारै शुभैर्मङ्गलभूतैः केतुभि ध्वजै बहुला व्याप्ता विचित्रशुभकेतुबहुला तथा "वाविपुक्खरिणीदीहियासुयसुनिवेसियरम्मजालघरगा," वाप्यश्चतुर स्राकारास्ताएव वृत्ता पुष्करिण्यो यदि वा पुष्कराणि विद्यन्तेयासु ता पुष्करिण्ये दीर्घिका ऋजुसारिण्य वापीषु पुष्करिणीषु दीर्घिकासु च सुष्टुनिवेसितानि रम्याणि, जालगृहकाणि येषु ते वापीपुष्करिणीदीर्घिकासु सुनिवेशितरम्यजालगृहका। तथा पिण्डिमा पिण्डिता सती निर्हारिमादूर विनिर्गच्छन्ती पिण्डिमनिर्हारिमा तां सुगन्धिंसद्गन्धिकां शुभसुरभिरयो गन्धा न्तरेभ्य सकाशात् मनोहर शुभसुरभिमनोहरा तां च "महया" इति प्राकृतत्वात्। द्वितीयार्थे तृतीया महतीमित्यर्थ। "गन्धद्घाणिं" यावद्भिगन्धिपुद्गलैर्गन्धिविषयेघ्राणिरूपजायते, तावती गन्धपुद्गलसंहतिरुपचारात् गन्धघ्राणिरित्युच्यते, तान्निरन्तर मुञ्चन्त। तथा "सुहसेउकेउ बहुला" इति शुभा प्रधाना सितवोमार्गा आलवालपाल्यो वाकेतवो ध्वजा बहुलाबहवो येषां ते तथा। "अणेगरहसगडजाणजुग्गगिल्लिथिल्लिसिवियपण्डिमोएणा" इति रथादिविधा क्रीडारथा

अनेकनरव्यामे पुरुषव्यामे समसारिसेरग्राह्योऽप्रमेयी घनीनिविडोविपुलोविस्तीर्णीवृत्त स्कन्धी येषां ते अनेकनरव्यामसुप्रसारितग्राह्यायनविपुलवृत्तस्कन्धा। तथा अच्छिद्राणि पत्राणि येषां ते अच्छिद्रपत्रा, किमुक्तम्भवति। न तेषां पत्रेषु वातदोषत कालदोषतो वा गडुरिकादि रीतिरूपजातीयेन तेषु पत्रे छिद्राण्यभविष्यन्निति तेऽच्छिद्रपत्रा। अथवा एव नामान्योन्य शाखाप्रशाखानुप्रवेशात्पत्राणि पत्राणामुपरिजातानि येन मनागप्यपान्तराल रूपं छिद्रनोपलक्ष्यते इति तथा चाह। "अविरलपत्ता इति"। अत्र हेतौ प्रथमातत्तोऽयमर्थ। यतोऽविरलपत्रा इति अपि कुतइत्याह। अवातीनपत्रा वातीनानि वातीपहतानि वातेनपातितानीत्यर्थ। न वातीनानि अवातीनानि पत्राणि येषां ते तथा, किमुक्तं भवति न प्रबलेन खरपरुषेण वातेन तेषां पत्राणि भूमौ निपात्यन्ते ततो अवातीनपत्रत्वादविरलपत्रा इति। अच्छिद्रपत्रा इत्यत्र प्रथम व्याख्यानपक्षमधिकृत्य हेतुमाह। "अणईइपत्ता" नविद्यते इति, गडुरिकादिरूपा येषां तान्य नीतीनि पत्राणि येषां ते अनीतिपत्रा, अनीतिपत्रत्वाच्छिद्रपत्रा। "निद्धूयजरढपण्डुपत्ता" इति निर्धूतानि अपनीतानि जरठानि पाण्डुपत्राणि येभ्यस्ते निर्धूतजरठपाण्डुपत्रा, किमुक्तं भवति यानि वृक्षस्थानि जरठानि पाण्डुपत्राणि वातेननिर्धूयनिर्धूयभूमौ पातितानि भूमेरपि च प्रायोनिर्धूय निर्धूयान्यत्रापसारितानीति। "नवहरियभिसन्तपत्तभारन्धयारगम्भीरदरिसणिज्जा" इति नवेन प्रत्यग्रे ण हरितेन नीलेन भासमानेन स्निग्धत्वचादीप्यमानेन पत्रभारेण दलसञ्चयेन योऽन्धकारोऽन्ध कारस्तेन गम्भीरा अलक्ष्यमध्यभागा स्ततोदर्शनीया नवहरितभासमानपत्रभारान्धकारगम्भीर दर्शनीया। तथा उपविनिर्गतैरिति भाव। नव तरुणपत्रपल्लवैस्तथा कोमलैर्मनोज्ञैश्चलद्भि कुञ्चितचलद्भिरीषत्कम्पमाने किसलयैरवस्थाविशेषोपेते पल्लवविशेषैस्तथासुकुमारै प्रवालै पल्लवांकुरै शोभितानि वरांकुराणि वराङ्कुरोपेतानि अग्रशिखराणि येषां ते उपनिर्गत तरुण तरुणपत्रपल्लवकोमलोज्ज्वलचलत्किसलयसुकुमार प्रवालशोभितवराङ्कुराग्रशिखरा। इहाङ्कुर प्रवालयो कालकृतावस्थाविशेषाद्विशेषोभावनीय। तथा नित्यंसर्वकालं षट्स्वपिऋतुष्वित्यर्थ। कुसुमिता कुसुमानि पुष्पाणि सञ्जातान्येषामिति कुसुमिता तारकादि दर्शनादितप्रत्यय "निच्चंमउलिया" इति नित्यं सर्वकालं मुकुलिता मुकुलानि नामकुड्मलानि कुलिकाइत्यर्थ "निच्चं लवइया" इति पल्लविता "निच्चंथवइया इति स्तबकिता स्तबकभारवन्त इत्यर्थ नित्यं गुलुइया इति गुल्मिता स्तबकगुल्मौ गुच्छविशेषौ नित्यं गोच्छिता गोच्छवन्त नित्यं यमलिता यमलन्नामसमानजातीययोर्युग्म तत् सञ्जातमेषामिति यमलिता नित्यं युगलिता युगलं सजातीय विजातीययोर्द्वन्द्वन्तदेषां सञ्जातमिति युगलितास्तथा नित्यं सर्वकाले फलभरेण विनता ईषन्नता स्तथा नित्यं प्रणता फलभरेण प्रकर्षतोऽति दूरमधः प्रणता। तथा नित्यं सर्वकाल सुविभक्तासु विच्छित्तिक प्रतिविशिष्टोमञ्जरीरूपोयोऽवतंसक तद्धरास्तद्धारिण। एव सर्वोऽपि कुसुमितत्वादिको धर्मएकैकस्य वृक्षस्योक्त साम्प्रतमशेषाधिकृताना सकल कुसुमितत्वादि

प्राग्वत्। अशोकवरपादपस्योपरि बहूनि छत्रातिछत्राणि छत्रात् लोकप्रसिद्धादेकसंख्याकादतिशायीनि छत्राणि। उपर्यधोभागेन द्वित्र्यानि त्रिसंख्यानि वा छत्रातिछत्राणि तथा बहव पडागाइ पडागा इति पताकाभ्यो लोकप्रसिद्धाभ्योतिशायिन्य पताका पताकाति पताका बहूनितिष्वेव छत्रातिछत्रादिषु, घण्टा युगलानि चामरयुगलानि तथा तत्र तत्रप्रदेशे उत्पलहस्तका उत्पलाख्य जलजकुसुमसंघातविशेषा, एवं पद्महस्तका कुमुदहस्तका नलिनहस्तका सुभगहस्तका सौगन्धिकहस्तका पुण्डरीकहस्तका महापुण्डरीकहस्तका शतपत्रहस्तका सहस्रपत्रहस्तका सत्यसम्मार्दभकम्। पद्म सूर्यविकाशिपङ्कजं कुमुदञ्चैरवं नलिनमीषद्रक्त पद्म सुभगं पद्म विशेष। सौगन्धिकं कल्हार पुण्डरीकं श्वेताम्बुजं तदेवातिविशालं महापुण्डरीकं शतपत्र सहस्रपत्रं पत्रसंख्याविशेषा। १अ[illegible] पद्मविशेषौ एतेच छत्रातिछत्रादय सर्वेपि सर्वरत्नमया सर्वात्मनारत्नमया। "अच्छासण्हा" इत्यादि विशेषणजातपूर्ववत्। तस्सणमित्यादि तस्यणमिति प्राग्वत्। अशोकवरपादपस्याधस्तात् एत्थणमिति अशोकवरपादपस्याधस्तात् एत्यणमिति अशोकवरपादपस्ययदधोऽत्रणमिति पूर्ववत्, एकोमहान् पृथ्वीशिलापट्टकः प्रज्ञप्त कथं भूतइत्याह, "ईसिंखन्धीसमल्लीणे" इत्यादि इहस्कन्ध स्थुडमित्युच्यते तस्याशोकवरपादपस्य यत् ईषत् मनाक सम्यग्लीन स्तदासन्नइत्यर्थः। "विक्खम्भायामसुप्पमाणे" इति विक्खम्भेनायामेन शोभनमौचित्यानतिवर्त्तिप्रमाणं यस्य स विष्कम्भायामसुप्रमाणः। कृष्णा कृष्णात्वमेव निरूपयति "अञ्जणगघणकुवलयहलहरकोसेज्जसरिसे" अञ्जनकी वनस्पति विशेषः, घनोमेघ कुवलय नीलोत्पलं हलधरकौशेयं बलदेववस्त्रनी सदृश समानवर्ण। "आगासकेसकज्जलकक्केयण इन्दनीलअयसिकुसुमप्पगासे" आकाश धूलीमेघादिविरहितं केशा शिरसिजा कज्जलं प्रतीत कर्केतनेन्द्रनीलौमणिविशेषौ अतसीकुसुमं प्रसिद्धमेतेषामिव प्रकाशो दीप्तिर्यस्य स तथा "भिगञ्जणभङ्गभेयनीलगुलियगवलाइरेगे" इति भृङ्गाश्च चतुरिन्द्रियपक्षिविशेषौ अञ्जनं सौवीराञ्जन तस्य भङ्गेन विच्छित्याभेद छेदोऽञ्जनभङ्गभेदोरिष्टको रत्नविशेषौ नीलगुटिका प्रतीता। गवलं माहिषंशृङ्गान्तेभ्योपि कृष्णत्वेनातिरेको यस्य स तथा। "भमरनिकुरुम्बभूये" इत्यत्र भूतशब्दोऽपम्यवाची यथा घंटादेश सुरलोकभूत सुरलोकोपमइत्यर्थ ततोयमर्थो भ्रमरनिकुरम्बोपमो "जम्बूफलअसणकुसुमबन्धणनीलुप्पलपत्तनिकरमरगय आसासगनयणकीयासिवन्ने"। जम्बूफलानि प्रतीतानि असनकुसुमवन्धन असनपुष्पवृन्तं नीलोत्पलपुष्पपत्रनिकरोमरकतमणि प्रतीत। आसासको बीयकाभिधानोवृक्षो नयनकीकानिवमध्यतारा। असि एष गन्तेषामिववर्णोयस्यसतथा, स्निग्धोनतु रूक्षो घनोनिविडोनतुकोष्टकइवमध्यशुषिर। "अट्ठसिर" इतिलक्षणशोपिरराहित। "रूवगपडिरूवदरिसणिज्जे" इति रूपकानां यानि तत्र प्रतिरूपाणि संक्रान्तानि प्रतिबिम्बानिसैदर्शनीयो रूपकप्रतिरूपदर्शनीयो आदर्शतलोपमो आदर्शोदर्पणस्तस्यतलन्तेन समतयोपमायस्य आदर्शतलोपम। सुष्टुमनोसिरमयतीति सुरम्य कृद्बहुलमितिवचनात्कर्त्तरियप्रत्यय। "सीहासणसंठिए" इति

संग्रामरथाश्च शकटानि प्रतीतानि यानानि सामान्यतः शेषाणि वाहनानि युग्यानि गोल्लविषय प्रसिद्धानि हिहस्तप्रमाणानि वेदिकोपशोभितानि जम्पानानि शिविकाः कूटाकाराच्छादिता जम्पानविशेषाः स्यन्दमानिकाः पुरुषप्रमाणजम्पानविशेषाः, अनेकेषां रथशकटादीनामभीक्ष्णं शौर्यत्वात् प्रतिमोचनं येषु ते तथा। "पासादीया" इत्यादि पदचतुष्टयं प्रागवत्, "तेसं तिलगा" इत्यादि पाठसिद्धं "नवरन्नागलयाति" न्नागाद्रुमविशेषाः "वणलयाईतिविच्छा" अपिद्रुमविशेषाः। कुमाराम्वसतात्वमेकशाखाकाशाः द्रष्टव्यं येष्विद्रुमाद्वहागतैकशाखा न तु दिग्विदिक्, प्रवृत्त बहुशाखासी लता इति प्रसिद्धा। "निच्चंकुसुमिताउ जावपडिरूवाओ" इत्यत्र यावत्करणात् "निच्चमाउइयाउ यिच्चंलवइयाउ यिच्चंथवइयाउ निच्चंगुलियाउ निच्चंगुच्छियाउ निच्चंजमलि याउ निच्चंजुयलियाउ निच्चंविणमियाउ निच्चंपणमियाउ निच्चंसुविभत्तपडिमंजरिवडेंसगधरी उ निच्चं"। "कुसुमियमाउइयलवइयथवइयगुलियविणमिय सुविभत्तपडिमंजरिवडिंसगधरीउ संपिंडियदरियभमरमहुयरिपहकरपरिलिंत मत्तछप्पय कुसुमासवलीलमहुकरिंगत गुमगुमेंत गुञ्जं तदेसभागाउपासाइयाउदरिसणिज्जाअभिरूवाउपडिरूवाउ" इति एतच्चसमस्तं प्रागवत् व्याख्येयं। तस्यणमिति प्रागवत्, अशोकवरपादपस्य उपरिबहूनि अष्टाष्टौ मंगलकानि प्रज्ञप्तानि। तद्यथा, स्वस्तिकः "श्रीवच्छणंदिया वत्ते" इति नन्द्यावर्त्तः क्वचित् नन्दावत्त इति पाठः तत्र नन्दावत्त इति शब्दसंस्कारः। वर्द्धमानकं शरावसंपुटं भद्रासनं कलशीमत्स्ययुग्मं दर्पणश्च। एतानि चाष्टावपि मंगलकानि सर्व्वरत्नमयानि अच्छानि आकाशस्फटिकवदतीव स्वच्छानि सलक्खाणि सलक्खणपुद्गलस्कन्धनिष्पन्नानि सलक्खणनिष्पन्नपटवत्सलक्खणानि मसृणानि घुटितपटवत्। "घट्ठा" इतिघृष्टानीवमृष्टानिखरशाणया पाषाणप्रतिमानवत्। "मट्ठा" इति मृष्टानीवमृष्टानि सुकुमारशाणयापाषाणप्रतिमेव अतएव नीरजांसि स्वाभाविक रजोरहितत्वात्। निर्म्मलान्यागन्तुकमलाभावात् निष्पङ्कानि कलङ्कविकलानि कर्द्दमरहितानि वा। "निक्कंकट छाया" इति निष्कंकटानि निष्कवचानि रावयानिरुपघातेतिभावाथः छायादीप्तिर्येषां तानि निष्ककटछायानि। सप्रभाणि स्वरूपतः प्रभावन्ति समरीचानि बहिर्विनिर्गतकिरणजालानि अतएव सोद्योतानि बहिर्व्यवस्थितवस्तुस्तोमप्रकाशकराणि पासाइया इत्यादि। पदचतुष्टयव्याख्या पूर्ववत्। तस्सणमित्यादि तस्यणमिति प्रागवत् अशोकवरपादपस्योपरिबहवः कृष्णचामरध्वजाः चामराणिच ध्वजाश्च चामरध्वजाः कृष्णाश्च ते चामरध्वजाश्च कृष्णचामरध्वजाः। एवं नील चामरध्वजाः लोहितचामरध्वजाः हारिद्रचामरध्वजाः। एतेच कथम्भूता इत्याह। "अच्छाः" स्फटिकवदतिनिर्मलाः श्लक्ष्णाः श्लक्ष्णपुद्गलस्कन्धनिष्पन्नारूप्यपट्टा इति रूप्यो रूप्यमयीवज्रमयस्य दण्डस्योपरिपट्टो येषां ते रूप्यपट्टाः वयरदण्डा इति वज्रोवज्ररत्नमयोदण्डो रूप्यपट्टमध्यवर्त्ती येषां ते वज्रदण्डाः। तथा जलजानामिव जलजकुसुमानां पद्मादीनामिवामलो गन्धो येषां ते जलजा मलगन्धकाः। अतएव सुरम्याः अतिशयेन रमणीयाः पासाइया इत्यादि पूर्ववत्। तस्यणमिति

प्राग्वत् । अशोकवरपादपस्योपरि बहूनिछत्रातिछत्राणिछत्रात् लोकप्रसिद्धादेकसंख्याकादतिशा
यीनि छत्राणि। उपर्यधोभागेन द्विसंख्यानि त्रिसंख्यानि वा छत्राति छत्राणि तथा बहव पताकाए
पताकाः इति पताकाभ्यो लोकप्रसिद्धाभ्योतिशायिन्यः पताकाः पताकातिपताकाः बहूनितीव्येव
छत्रातिछत्रादिषु, घण्टायुगलानि चामरयुगलानि तथा तत्र तत्रप्रदेशे उत्पलहस्तका उत्प
लाख्य जलजकुसुमसंघातविशेषाः, एवं पद्महस्तका कुमुदहस्तका नलिनहस्तका सुभगहस्तका
सौगन्धिकहस्तका पुण्डरीकहस्तका महापुण्डरीकहस्तका शतपत्रहस्तका सहस्रपत्रहस्तका
उत्पलत्वार्दभकम्। पद्म सूर्यविकाशिपङ्कजं कुमुदं कैरवं नलिनमीषद्रक्त पद्मं सुभगं पद्म
विशेष । सौगन्धिकं कल्हारं पुण्डरीकं श्वेताम्बुजं तदेवातिविशालं महापुण्डरीकं शतपत्र
सहस्रपत्रे पत्रसंख्याविशेषा( १वच्छिती पद्मविशेषौ एतेच छत्रातिछत्रादयः सर्वेपि सर्वरत्न
मयाः सर्व्वात्मनारत्नमयाः । "पंचछासपडा" इत्यादि विशेषणजातपूर्ववत्। तस्सणमित्यादि
तस्यणमिति प्राग्वत्। अशोकवरपादपस्याधस्तात् एत्यणमिति अशोकवरपादपस्याधस्तात
एत्यणमिति अशोकवरपादपस्ययदधोऽत्रणमिति पूर्ववत्, एकोमहान् पृथ्वीशिलापट्टकः प्रज्ञप्त
कथं भूतइत्याह "ईसिंखन्धीसमल्लीणे" इत्यादि इह स्कन्धः स्थुडमित्युच्यते, तस्याशोकवर
पादपस्य यत् ईषत् मनाक् सम्यग्लीन सदासन्नइत्यर्थः। "विक्खम्भायामसुप्पमाणे" इति विक्ख
म्भेनायामेन शोभनमौचित्यानतिवर्त्तिप्रमाणं यस्य स विष्कम्भायामसुप्रमाणः । कृष्णाः कृष्णत्वमेव
निरूपयति "अञ्जणगघणकुवलयहलहरकोसेज्जसरिसे" अञ्जनको वनस्पति विशेषः, घनोमेघः
कुवलय नीलोत्पलं हलधरकौशेयं बलदेववस्त्रन्तै सदृशः समानवर्णः । "आगासकेसकज्जलकक्केयण
इन्दनीलअयसिकुसुमप्पगासे" आकाश धूलीमेघादिविरहितं केशाः शिरसिजाः कज्जलं प्रतीतं
कर्केतमिन्द्रनीलौमणिविशेषौ अतसीकुसुमं प्रसिद्धमेतेषामेव प्रकाशो दीप्तिर्यस्य स तथा "भिंग
ञ्जणभग्गभेयनीलगुलियगवलाइरेगे" इति भृङ्गाश्च चतुरिन्द्रियपक्षिविशेषौ अञ्जनं सौवीराञ्जन
तस्य भङ्गेन विछित्यामेदः छेदोऽञ्जनभङ्गभेदोरिष्टको रत्नविशेषो नीलगुटिका प्रतीता । गवलं
माहिषशृङ्गान्तेभ्योपि कृष्णत्वेनातिरेको यस्य स तथा। "भमरनिकुरंबभूये" इत्यत्र भूतशब्दोऽप
म्यवाची यथा देवादेश सुरलोकभूतः सुरलोकोपम इत्यर्थ स्ततोयमर्थो भ्रमरनिकुरम्बोपमो, "जम्बू
फलअसणकुसुमबन्धणनीलुप्पलपत्तनिकरमरगय आसासगनयणकीयासिवन्ने"। जम्बूफलानि प्रती
तानि असनकुसुमबन्धनं असनपुष्पवृन्तं नीलोत्पलपुष्पपत्रनिकरोमरकतमणिः प्रतीतः । आसासको
बीयकाभिधानोवृक्षो नयनकीकामिवमध्यतारा। असि एक गन्तेषामिववर्णोयस्यसतथा स्निग्धोनतु
रुक्षो घनोनिविडोनतुकोष्टकवमध्यशुषिर। "अ भुसिर" इतिशल्यशुषिररहित । "रुवगपडि
रूवदरिसणिज्जे" इति रूपकानां यानि तत्र प्रतिरूपाणि संक्रान्तानि प्रतिबिम्बानिरिदर्शनीयो रूपक
प्रतिरूपदर्शनीयो आदर्शतलोपमो आदर्शोदर्पणस्तस्यतलमन्तेन समतयोपमायस्य आदर्शतलोपम।
सुष्ठुमनासिरसयतीति सुरस्यः कुदंगसमितिवचनात्सरियमत्ययः। "सौवासणमगिठए" इति

## उववत्तियगामेणं[1]। सेयराया[2] धारिणी देवी सामी समोसढं[3] परिसानिग्गया[4] राया[5] जावपज्जुवासइ[6]।

सिंहासनस्येव संस्थितं संस्थानं यस्य स सिंहासनसंस्थितः। अतएव सुरूपं शोभनं रूपमाकारो यस्य स सुरूपः। इतश्च सुरूपोयत आह। "मुत्ताजालखइयन्तकम्मे" मुक्तायलसमूहा खचितानि अन्तकर्मसु प्रान्तप्रदेशेषु यस्य स मुक्ताजालखचितान्तकर्म्मा। "आईणगरूयबूर नवनीयतूलफासे" आजिनकं चर्म्ममयं वस्त्रं रूतं प्रतीतम्बूरो वनस्पतिविशेषो, नवनीतं म्रक्षणं तूलमर्कतूलं तेषामिव कोमलतयास्पर्शोयस्य स आजिनकरूतबूरनवनीततूलस्पर्श। "सव्वरयेणामये" इत्यादि विशेषणकदम्बकं प्राग्वत् ॥ ८ ॥ (सेयरायाधारिणीदेवी जावसमोसरणंसम्मत्तमिति) तस्यामामलकल्पायां नगर्य्यांश्वेतोनामराजा तस्य समस्तान्तःपुरप्रधानाभार्या सकलगुणाधारणा धारिणी नामदेवी। "जावसमोसरणंसम्मत्त" मिति यावच्छब्दकरणात् राजवर्णको, देवीवर्णकः समवसरणञ्चौपपातिकग्रमानुसारेण तावद्वक्तव्यं यावत्समवसरणं समाप्तं, सचैवं "तत्थणं आमल कप्पाएनयरीएसेएणामरायाहोत्था। महयाहिमवन्त महयमन्दरमहिन्दसारे अच्चन्तविसुद्धराय कुलवंसप्पसूए निरन्तरं रायलक्खणविरायङ्गमङ्गे बहुजण बहुमाण पूइए सव्वगुणसमिद्धे खत्तिए मुइए मुद्धाभिसित्ते माउपिउसुजाए दयपत्ते सीमङ्करे सीमन्धरे खेमङ्करे खेमन्धरे मणु स्सिन्दे जणवयपिया जणवयपुरोहिए सेउकरे नरपवरे पुरीसवरे पुरिससीहे पुरिसवग्घे पुरिसआसि विसे पुरिसवरपोण्डरीए पुरिसवरगन्धहत्थी अड्ढेदित्तेवित्ते विच्छिन्नविपुलभवनसयणासणजाणवाहणाइन्ने धनबहुजायरूवरयए आओगपओगसंपउत्ते विच्छड्डियपउरभत्तपाणा बहुदासीदासगोमहिसगवेल गप्पभूए पडिपुन्नजन्तकोसकोट्ठागाराउहघरे बलवंदुब्बलपच्चामित्ते ओहयकण्टय मलियकण्टयम् उद्धियकण्टयं अप्पडिकण्टयं ओहयसत्तु निहयसत्तु मलियसत्तु निज्जियसत्तु पराइयसत्तु ववगय दुब्भिक्खमारीसमारि भयविप्पमुक्कं खेमंसिवंसुभिक्खं पसन्तडिम्बडमर रज्जंपसासेमाणेविहरइ तस्सणं सेयस्सरन्नोधारिणीनामदेवी होत्था सुकुमालपाणिपाया अहीणपुण्णपञ्चिन्दियसरीरा

---

लक्खणवंजणगुणोववेया इत्यादि सा आमलकल्पानगरी आम्रशालवनं चैत्यं आम्रशालवनचैत्यवर्णनं तत्र अशोकवृक्षस्तस्याधः पृथिवी शिलापट्टकः कथ्यतामित्यर्थः आमलकल्पानगरी तत्र श्वेत नाम राजा धारिणीनामदेवीपट्टराज्ञी स्वामी भगवान् श्रीमहावीरः समवसृतः परिषन्निर्गता ततः श्वेतराजापि निर्गतः यावत्संविग्नः कौणिकनीपरिवाडिकथनं राजवर्णकराज्ञीवर्णक

---

(पाठान्तराणि) १। उववत्तियगामेणं। २। सेयराया सेयासेयोराय सेएराया। ३। सामी समोसढे, सामीसमोसढे जाव समोसरणं सम्मत्तम। ४। परिसानिग्गया परिसानिग्गया। ५। राया, राया। ६। जाव पज्जुवासइ पज्जुवासतीति।

सव्व गत्त्कजयगुणोववेया माणुम्माणपमाणपडिपुन्नसुजायसव्वङ्गसुन्दरङ्गी ससिसोमागारक न्तपियदंसणा सुरूवा करयलपरिमियपसत्थतिवलियमज्झा कुण्डलुल्लिहियपीणगण्डलेहा कोमुइ रयणियरविमलपडिपुन्नसोमवयणा सिङ्गारागारचारुवेसा सङ्गयगय हसिय भणिय चिट्ठिय विलासललियसंलावनिउणजुत्तोवयारकुसला सुन्दरथणजघनवयणकरचरणनयणलायण्णविलास कलिया सेणमरत्तामदि अणुरत्ता अविरत्ताइट्ठे सद्दफरिसे रसरूवगन्धे पञ्चविहेमाणुस्सएकाम भोगेपच्चणुभवमाणाविहरइ"। एष राजदेवी वर्णकोऽस्य व्याख्या। "महयाहिमवन्तेति" महाहिमवान् हैमवतस्य क्षेत्रस्योत्तरत सीमाकारीवर्षधर पर्वती मलयः पर्वतविशेष सुप्रतीतो मन्दरोमेरुमहेन्द्र शक्रादिको देवराजस्तद्वत्सार प्रधानोमहाहिमवन्महामलयमन्दरमहेन्द्रसारः। तथा "अत्यन्तविशुद्ध राजकुलवंश प्रसूतोऽत्यन्तविशुद्धराजकुलवंशप्रसूत। तथा "निरन्तर राय लक्खणविराइयङ्गमङ्गे" इति निरन्तरमपान्तरालाव्यवधानाभावेन राजलक्षणैराज्यसूचकैर्लक्षणै विराजितानि, अङ्गमङ्गानि अङ्गप्रत्यङ्गानि यस्य स निरन्तरराजलक्षणविराजिताङ्गमङ्ग। तथात्रबहुभिर्जनैर्बहुमानेनान्तरङ्गप्रीत्यापूजितो बहुमानपूजित कस्मादित्याह "सव्वगुणसमिद्धे" सर्वै मौर्यपगमादिभिर्गुणै समृद्ध स्फीत सर्वगुणसमृद्धस्ततो बहुजनबहुमानपूजितोगुणवत्सुप्राय सर्वेषा-मपि बहुमानसम्भवात्। तथा "खत्तिए" इति क्षत्रस्यापत्यं क्षत्रिय क्षत्रादिय इति इयप्रत्यय, अनेन नवमाप्टमदिन[?]वसराजकुलवंशप्रसूतोपि न हीनजातीय किन्तूत्तमजातीयइत्यावेदितं। तथा मुदित सर्वकाल हर्षवान् प्रत्यनीकराजकृतोपद्रवासम्भवात् तदसम्भवश्च प्रत्यनीकानामे वाभावात्तथाचाह, "मुद्धाभिसित्तेमायः" सर्वैरपि प्रत्यन्तराजैः प्रतापमसहमानैर्नान्यथास्माकंस्था तिरिति परिभाव्य मूर्द्धाभिमस्तकैरभिषिक्त पूजितो मूर्द्धाभिषिक्त स्तथा मातृपितृभ्यां सुजातो मातृ-पितृसुजात। अनेन समस्तगर्भाधानप्रभृति सम्यक्विदोषविकलइत्यावेदित। तथा दयाप्राप्त स्वभावत शुद्धजीवद्रव्यत्वात्तथा सेवामागतानां पूर्वापूर्वनृपाणां सीमां मर्यादां करोति, यथा एव वर्त्ति तव्यमेवन्नीति सीमङ्करः। तथा पूर्वपुरुषपरम्परायातां स्वदेशे प्रवर्त्तमानां सीमां मर्यादां धारयति पालयति नतु विलुम्पतीति सीमन्धरः। अतएव मनुष्येन्द्र तथा जनपदस्य पितेवजनपदपिता कथं पितेवेत्यत आह। जनपदपाल जनपद पालयतीति जनपदपाल स्ततो जनपदस्य पितेव तथा जनपदस्य शान्तिकारितया पुरोहितइव जनपदपुरोहित तथा सेतुर्मार्गस्तं करोतीति सेतुकरो मार्गदर्शक इति भाव। केतुश्चिह्नन्तत्करोतीति केतुकरोऽद्भुतसर्वविधान्तकरीति भाव। तथा नरेषु मनुष्येषु मध्ये प्रवरो नरप्रवर स च सामान्यमनुष्यादिस्वरूपाणि स्यादत आह। "पुरिसवरे" पुरुषेषु पुरुषाभिमानिषु मध्ये वरःप्रधानम् उत्तमपौरुषोपेततवादिति पुरुषवर। तथा पुरुषसिंहइवाप्रतिमल्लतया पुरुषसिंह स्तथा पुरुषेषु व्याघ्रइव शूरतया पुरुषव्याघ्र। पुरुष आशीविषइव दोषविनाशनशीलतया पुरुषाशीविष। पुरुषोवरपुण्डरीकमिवोत्तमतया भुवनस्तोत्रस्वरूपकत्वात् पुरुषवरपुण्डरीक। पुरुषोवरगन्धहस्तीवपरगनसाम्यानात् प्रतीति

पुरुषवरगन्धहस्ती ततो भवति, पुरुषवरस्तथा चाद्य' सम्प्रोदोप्त' शरीरावचादिर्दीप्यमानत्वात् हस्तीवाहस्पारिमानमर्दनभीतत्वादतएव विस्तीर्जगत्प्रतीतो यदुक्तमाद्य इति तदेव सविस्तरमुप दर्शयतिच्छिबबेत्यादि। विस्तीर्णानि विस्तारवन्ति विपुलानि प्रभूतानि भवनानि गृहाणि शयनानि आसनानि च प्रतीतानि यानानि रथादीनि वाहनानि अश्वादीनि एतैराकीर्णोत्याप्तोगुको विस्तीर्ण विपुलभवनशयनासनयानवाहनाकीर्ण। तथा बहुधनं बहुजातरूपं सुवर्णरजतं च रूपे यस्य स बहुधनबहुजातरूपरजत। तथा आयोगप्रयोगसंयुक्त आवाहन विसर्जन कुशल। तथा विच र्दितं तथाविध तथाविधविशिष्टोपकारकारितया विसृष्टसकुकुटिकादिषु प्रचुरं भक्तपानं यस्मिन्। राज्यसमुल्लासति सविच्छर्दितप्रचुरभक्तपानः, अमीन पुण्याधिकतया तस्मिन् राज्यमनुशासति दुर्भिक्षमभूदिति कथं तथा बहूनां दासीनां दासानां गवां बलीवर्दानां महिषाणां गवां स्त्रीमवानां एड़कानां च प्रभु बहुदासीदासगोमहिषगवेलक प्रभु सत' स्वार्थिककप्रत्यय विधानात्प्रभुक। तथा प्रतिपूर्णानि भृतानि यन्त्रकोशकोष्टागाराणि यन्त्रगृहाणि कोशगृहाणि भाण्डागाराणि कोष्टगृहाणि धान्यानां कोष्टागाराणि गृहाणीति भाव। आयुधगृहाणि च यस्य स प्रतिपूर्णय अकोशकोष्टा गारायुधगृह। तथाबलं शारीरिकं मानसिकं च यस्यास्ति स बलवान्। दुर्बलमस्वयमितो दुर्ब लानामकारणबलस्त इति भाव। एवं भूत सन् राज्यं प्रशासत् विहरत्य च तिष्टति इति योग। कथं भूतं राज्यमित्याह अपहतकण्टकं स्वदेशोपद्रवकारिणश्चारटा कण्टकाश्च कण्टकास्ते अत्र तथा अवकाशानासादनेन स्थगिता यस्मिन् तत् अपहत कण्टकं तथा मलिनाश्चपदवकुर्वाणा मान म्लानिमापादिता कण्टका यत्र तत्त मलिनकण्टकं। तथा उद्धृता स्वदेशत्याग जमीन जीवितस्या जमीन वा कण्टका यत्र तत् उद्धृतकण्टकं। तथा न विद्यते प्रतिमल्ल कण्टको यत्र तदप्रतिकण्टकं। तथा "जय सत्तु" इति प्रत्यनीकाराजानः शत्रवस्तो अपहता स्वावकाशमत्तममानीकृता यत्र तत् अपहतशत्रुहतामित्यतारबाधाश्रो पतिता शत्रवो यत्र तन्निहतशत्रु। तथा मलिनासाहत सैन्य भासापादानतीमानस्थानिमापादिता शत्रवो यत्र तत् मलितशत्रु। तथा स्वातैकविनाशेन स्वदेश विनाशेन जीवितनाशनेन वा उद्धृता शत्रवो यत्र तत उद्धृत शत्रु। एतदेव विशेषणद्वयेन व्याचष्टे निर्जितशत्रुपराजितशत्रु। तथा व्यपगत दुर्भिक्ष दोषमारिश्च यत्र तत् व्यपगत दुर्भिक्षदोषमारि। तथा भयेन स्वदेशोत्थेन परचक्रकृतेन वा विमुक्तम्। अतएव क्षेमन्निरुपद्रवं शिवं मान्तं सुभिक्षं शोभना शुभाभिक्षा दर्शिनिनाञ्च यत्र तथा सुभिक्षम्। तथा प्रशान्तानि डिम्बानि विघ्नाडमराणि राजकुमारादिकृतविड्वरा यत्र तत् प्रशान्तडिम्बडमरम्। देवी वर्णके "सुकुमालपाणिपाया" इति सुकुमारौ पाणीपादौ च यस्या सा सुकुमारपाणिपादा। तथा अहीनानि अन्यूनानि स्वरूपत प्रतिपूर्णानि लक्षणत पञ्चापीन्द्रियाणि यस्मिन् तत्तथाविधं शरीरं यस्या साहीनप्रतिपूर्णपञ्चेन्द्रियशरीरा। तथा लक्षणानि स्वस्तिकचक्रादीनि व्यञ्जनानि मषतिलकादीनि गुणा सौभाग्यादयस्तैरुपेता लक्षणव्यञ्जनगुणोपपेता। "उपपपहत" इति शब्दस्य स्थाने

## तेणं कालेणं तेणं समयेणं।

पृषोदरादय इत्यसकारलोपे उपयेता इति द्रष्टव्यम्। "माणुम्माणपमाण पडिपुन्नसुजात सव्वंग सुन्दरंगी" इति तत्रमानं जलद्रोणप्रमाणता कथमिति चेत् उच्यते, जलस्यातिभृते कुण्डे पुरुषे स्त्रियां वा निवेशितायां यज्जलन्निस्सरतितयदिद्रोणप्रमाणं भवति तदा स पुरुषः स्त्रीवा मानप्राप्ता उच्यते, तथा उन्मानं अर्द्धभारप्रमाणता सा चैवं तुलायामारोपितः पुरुषः स्त्रीवायद्यर्द्धभारं तुलति तदा स उन्मानप्राप्ताभिधीयते। प्रमाणस्वांगुलेनाष्टोत्तरशतोच्छ्रयिता ततोमानोन्मानप्रमाणैः प्रतिपूर्णान्यनूनासुजातानि जन्मदोषवर्जितानि सर्व्वाणि अंगानि शिरःप्रभृतीनि यानि तैः सुन्दरां गीमानोन्मानप्रमाणप्रतिपूर्णसुजातसर्व्वांगसुन्दरी। तथा शशिवत्सोमाकारमरौद्रकारं कान्तं कमनीय प्रियं दृष्टृणामानन्दोत्पादकं दर्शनं रूपं यस्याः सा शशिसोमाकारकान्तप्रियदर्शना, अतएव सुरूपा, तथा करतलपरिमितो मुष्टिग्राह्यः प्रशस्तलक्षणोपेतः त्रिवलिकोः वलिकयोपेतो रेखात्रयोपेतो वलिकोवलवा न्मध्योमध्यभागो यस्याः सा करतलपरिमितप्रशस्तत्रिवलीकवलिकमध्या। तथा कुण्डलाभ्यामुल्लिखिता स्पृष्टा गण्डलेखा कपोलविरचितमृगमदादिरेखा यस्याः सा कुण्डलो ल्लिखितगण्डलेखा। "कोमुईरयणिगरविमलपडिपुन्नसोमवयणा" कौमुदीकार्त्तिकीपौर्णमासी तस्यां रजनीकरश्चन्द्रस्तद्वत् विमलं निर्मलं प्रतिपूर्णमन्यूनातिरिक्तमानं सौममरौद्राकारं वदनं यस्याः सा तथा। शृङ्गारस्य रसविशेषस्यागारमिवागारं अथवा शृङ्गारोमण्डनभूषणाटोपस्तत्प्रधान आकारः आकृतिर्यस्याः सा तथा। तथाचारुर्वेशो नैपथ्योयस्याः सा तथा, ततः कर्मधारयः शृङ्गारागार चारुवेशा। तथा सङ्गता ये गतहसितभणितचेष्टितविलासा यश्च निपुणोयुक्तश्च जनपरञ्जनान् प्रत्युपचारस्तेषु कुशला सङ्गतगतहसितभणितचेष्टितविलाससलितसंलापनिपुणयुक्तोपचारकुशला, तत्र सङ्गतं नासङ्गतं यद्गमनतया गृहस्येवान्तर्गमनं नतु बहिः स्वेच्छाचारितया। संगतं हसितं यत् कपोलविकाशमात्र सूचितंनत्वट्टहासादिहसितं। "कपोलकढिय" मिति वचनात् सगतं भणितं यत्समागतो प्रयोजने मर्मभणितं परिहारेण विवक्षितार्थमात्रप्रतिपादनसगतचेष्टितं यत्, कुचजघनाद्यवयवाच्छादनपरतयोपवेशनशयनोत्थानादि सङ्गतो विलासः स्वकुलोचित्येन शृङ्गा रादिकरणं तथा सुन्दरैः स्तनजघनवदनकरचरणनयनलावण्यविलासैः कलिता। अत्र विलासः स्थानासनगमनादिरूपश्चेष्टाविशेषः। उक्तञ्च। स्थानासनगमनानां हस्त भ्रूनैत्र कर्मणाञ्चैव उत्पद्यते विशेषोयः श्लिष्टोसौ विलासः स्यात्। अन्येत्वाहुः विलासो नेत्रजोविकारः तथाचोक्तं हावो मुखविकारः स्यात् भावश्चित्तसमुद्भवः विलासो नेत्रजोज्ञेयो विभ्रमोभ्रूसमुद्भवः। (तेणं कालेणं तेणं समएणं) "समणे भगवमहावीरे आवचोत्तीसे बुद्धवयणातिसेस सम्पत्तेः सव्ववयणाति सम्पत्ते आगासगएणं चक्केणं आगासगएणं छत्तेणं आगासगयाहिं सेयवरचामराहिं

तेनकालेनतस्मिन्नवसर्पिणीनाचतुर्थारकेइत्यर्थः जिनेन्द्रोपवर्णिनगरवर्णनसामलकल्पाइंपधारीया

पुरुषवरगन्धहस्ती ततो भवति, पुरुषवरस्तया भाद्य समृद्धोदीप्त शरीरतेजसादेदीप्यमानत्वात् दर्प्तोवादप्रसारिमानमर्दनशीलत्वादतएव विख्यातगतमतीसो यद्दुक्तमाद्य इति तदेव मविस्तरमुप दर्शयतिच्छित्रवेत्यादि। विस्तीर्णानि विस्तारवन्ति विपुलानि प्रभूतानि भवनानि गृहाणि शयनानि आसनानि च प्रतीतानि यानानि रथादीनि वाहनानि अश्वादीनि एतैराकीर्णोत्याप्तोयुक्तो विस्तीर्ण विपुलभवनशयनासनयानवाहनाकीर्ण। तथा बहुधनं बहुजातरूपं सुवर्णरजतं च रूपे यस्य स बहुधनबहुजातरूपरजत। तथा आयोगप्रयोगसंयुक्त आवाहन विसर्जन कुशल। तथा विच्छर्दितं तथाविध तथाविधविशिष्टोपकारकारितया विमृष्टसुकुक्कुटिकादिषु प्रचुर भक्तपानं यस्मिन्। राज्यमनुशासति सविच्छर्दितप्रचुरभक्तपान, अनेन पुण्याधिकतया तस्मिन् राज्यमनुशासति दुर्भिक्षमभूदिति अर्थ, तथा बहूनां दासीनां दासानां गवां बलीवर्दानां महिषाणां गवां स्त्रीगवानां एडकानां च प्रभु बहुदासीदासगोमहिषगवेलक प्रभु स्तत स्वार्थिककमत्यय विधानात्प्रभुक। तथा प्रतिपूर्णानि भृतानि यन्त्रकोशकोष्टागाराणि यन्त्रगृहाणि कोशगृहाणि भाण्डागाराणि कोष्टगृहाणि धान्यानां कोष्टागाराणि गृहाणीति भाव। आयुधगृहाणि च यस्य स प्रतिपूर्णय न्त्रकोशकोष्टा गारायुधगृह। तथाबलं शारीरिकं मानसिकं च यस्यास्ति स बलवान्। दुर्बलप्रत्यमित्री दुर्बलानामकारणवत्सल इति भाव। एवं भूत सन् राज्यं प्रशासन् विहरत्य च तिष्टते इति योग। कथं भूतं राज्यमित्याह, अपहतकण्टकं स्वदेशोपद्रवकारिणश्चारटा कण्टकाश्च कण्टकास्ते अत्र ह्ता अवकाशानासीदमेन स्थगिता यस्मिन् तत् अपहत कण्टकं तथा मलिनाश्चपद्रवंकुर्वाणा नाम स्लानिमापादिता कण्टका यत्र तत्र मलितकण्टकं। तथा उद्धृता स्वदेशत्याग नमेन जीवितत्था नमेन वा कण्टका यत्र तत् उद्धृतकण्टकं। तथा नविद्यते प्रतिमल्ल कण्टको यत्र तदप्रतिकण्टकं। तथा "उहय सत्तु" इति प्रत्यमीकाराजान: शत्रवस्ते अपहता स्वावकाशमलभमानीकृता यत्र तत् अपहतशत्रुहतानिहतारश्चान्यो पतिता शत्रवो यत्र तन्निहतशत्रु। तथा मलितास्तहत सैन्य वासापादानतीमानस्लानिमापादिता शत्रवो यत्र तत् मलितशत्रु। तथा स्वातंत्र्यविनाशेन स्वदेश विनाशेन जीवितमात्रनेन वा उद्धृता शत्रवो यत्र तत् उद्धृतशत्रु। एतदेव विशेषणद्वयेन व्याचष्टे निर्जितशत्रुपराजितशत्रु। तथा व्यपगतं दुर्भिक्षं दोषमारिश्च यत्र तत् व्यपगत दुर्भिक्षदोषमारि। तथा भयेन स्वदेशोत्थेन परचक्रकृतेन वा विमुक्तम्। अतएव क्षेमनिरुपद्रवं शिवं प्रान्तं सुभिक्षं क्षेमना शुभाभिक्षा दर्भिक्षाभाव यत्र तथा सुभिक्षम्। तथा प्रशस्तानि डिम्बानि विम्बाडमराणि राजकुमारादिकृतविड्वरा यत्र तत् प्रशान्तडिम्बडमरम्। देवी वर्णके "सुकुमालपाणिपाया" इति सुकुमारौ पाणीपादौ च यस्या सा सुकुमारपाणिपादा। तथा अहीनानि अन्यूनानि स्वरूपत प्रतिपूर्णानि स्वस्वप्र पञ्चापीन्द्रियाणि यस्मिन् तत्तथाविधं शरीरं यस्या साहीनप्रतिपूर्णपञ्चेन्द्रियशरीरा। तथा लक्षणानि स्वस्तिकचक्रादीनि व्यञ्जनानि मषतिलकादीनि गुणा सौभाग्यादयस्तैरुपपेता लक्षणव्यञ्जनगुणोपपेता। "उपपयत" इति शब्दत्रय स्थाने

